# संस्कृत-वार्ता:

**27-12-2020**

**प्रात: - 06 : 55**

**मुख्यवार्ताः**

- प्रधानमन्त्री नरेन्द्रमोदी ह्य: दृश्य-श्रव्य-परान्तर्जालीय माध्यमेन केन्द्रशासिते जम्मू-कश्मीर-राज्ये आयुष्मान् भारतम् इति योजनान्तर्गतं **प्रधानमन्त्री-जय सेहत** इत्याख्यां जनारोग्य-योजनां प्रारभत।
- केन्द्रीय गृहमन्त्रिणा अमितशाहेन प्रत्यपादि यत् केन्द्रप्रशासनम् पूर्वोत्तर-क्षेत्रे सर्वांगीण विकासाय शान्तिव्यवस्थां च सुदृढीकर्तुम् अस्ति कटिबद्धम्।
- प्रशासनेनोक्तं यत् विश्वे कोविड नाइन्टीन् इति संक्रमणात् भारतस्य स्वास्थ्यलाभमिति: सर्वोत्तम:।
- प्रधानमन्त्री नरेन्द्रमोदी अद्य पूर्वाह्णे एकादश वादने स्वीये मन की बात इति मासिक कार्यक्रमे राष्ट्रवासिभिः साकं विचार-विनिमयं करिष्यति।

--------

**कोविड-ओपनिंग**

प्रियाः श्रोतारः कोविड नाइन्टीन इति वैश्विक संक्रमणं विरुध्य राष्ट्रं ऐक्यभावनया युध्यते। भवन्तोऽपि संक्रमणं इदं परास्तुं सन्नद्धाः भवन्तु। मुखनासिकाच्छादकं, सामाजिकदौर्यानुपालनं, पाणिपाद-प्रक्षालनञ्च इति उपायत्रयं सर्वदैव अवधारयन्तु।

**प्रधानमन्त्री-जम्मू**

प्रधानमन्त्री नरेन्द्रमोदी ह्य: दृश्य-श्रव्य-परान्तर्जालीय माध्यमेन केन्द्रशासिते जम्मू-कश्मीर-राज्ये आयुष्मान् भारतम् इति योजनान्तर्गतं **प्रधानमन्त्री-जय सेहत** इत्याख्यां जनारोग्य-योजनां प्रारभत। श्रीमोदी प्रावोचत् यत् जम्मू-कश्मीरं विकासपिथ समुन्नेतुं वर्तते राष्ट्रिय-जनतान्त्रिक संयुत्या: प्रमुखोद्देश्यम्। श्रीमोदिना अचिरमेव समनुष्ठितेभ्य: जम्मूकाश्मीर-जनपद्-विकास परिषद: निर्वाचनानि सुष्ठुतया सम्पादनाय जम्मूकश्मीर प्रशासनं श्लाघितम्। तेन जना: लोकतन्त्रं

सुदृढीकर्तुमपि प्रशंसिता:। तेन स्पष्टीकृतम् यत् योजनायाम् अस्यां सर्वा: जम्मूकाश्मीर-वास्तव्या: समाविशन्ते। सर्वेभ्यश्च पंच लक्ष रूप्यकात्मिकम् वित्तीय-स्वास्थ्य-सौविध्यं उपलभ्यते। आयुष्मान् भारतम् इति योजनान्तर्गतं प्रधानमन्त्री जनारोग्य-योजनया अनया केन्द्रशासितप्रदेशेषु अधुना लक्ष परिवारेभ्य: साहाय्यम् अवाप्स्यते। अवधेयं तथ्यमिदं-यत् अस्या: योजनाया: लाभ: अखिले**S**पि देशे प्राप्यते।

**<u>अमित शाह-सरकार</u>**

केन्द्रीय गृहमन्त्रिणा अमितशाहेन प्रत्यपादि यत् केन्द्रप्रशासनम् पूर्वोत्तर-क्षेत्रे सर्वांगीण विकासाय शान्तिव्यवस्थां च सुदृढीकर्तुम् अस्ति कटिबद्धम्। तेन ह्य: गुवाहाट्या: अमिंगांव इत्यत्र नैकासां विकासपरियोजनानां आधारशिला न्यस्ता। अमुना सबलं अवादि यत् प्रधानमन्त्रिणो मोदिनो नेतृत्वयुतं राष्ट्रिय जनतान्त्रिक संयुति प्रशासनं सर्वदा सर्वथा च पूर्वोत्तरभारतस्य विकासाय कटिबद्धमस्ति इति।

**<u>सरकार-कोविड</u>**

कोविड-नाइन्टीन् इति वैश्विक संक्रमणदृशा भारतं सुदृढां स्थितिं भजते। भारते अनारतं प्रत्यवाप्तिमितौ परिष्कार: समभिवर्ध्य प्रतिशतं सप्त-अष्ट दशमलवोत्तर पंचनवतिमित: जाजायत। स्वास्थ्यमन्त्रालयानुसारं आहत्य पंचाशत् सहस्राधिक सप्तनवति लक्षजना: स्वस्थीभूता:। विगते अहोरात्रे द्विसप्तत्यधिक द्वि शताधिक द्वाविंशति सहस्रं नूतन-प्रकरणानि पंजीकृतानि। एकपंचाशदधिक द्वि शतं जना: कालकवलिता: सूच्यन्ते। भारते आगामि सप्ताहादारभ्य कोविड नाइन्टीन् इति वैश्विक-संक्रमण-प्रतिरोधी-सूच्यौषधस्य प्रयोगाय पूर्वाभ्यास: समारप्स्यते। एतदर्थं चत्वारि राज्याणि सन्ति चितानि। एतेषु- आंध्रप्रदेश-पंजाब-गुजरात-असम-राज्याणि सन्ति अन्यतमानि। अवधेयं तथ्यमिदं यत् सप्त-सहस्र जनपद् प्रशिक्षुभि: सूच्यौषध-प्रयोगाय प्रशिक्षणं प्राप्तम्।

## मन की बात

प्रधानमन्त्री नरेन्द्रमोदी अद्य पूर्वाह्णे एकादश वादने स्वीये मन की बात इति मासिक कार्यक्रमे राष्ट्रवासिभिः साकं विचार-विनिमयं करिष्यति। इदं हि अस्य वर्षस्य अन्तिमो मन की बात कार्यक्रमो विद्यते। अवधेयं यत् प्रधानमन्त्री प्रत्येकं मासस्य अन्तिमे रविवासरे देशवासिभिः साकं आकाशवाण्या प्रसारिते मन की बात इति कार्यक्रमे विचार-विनिमयं करोति। कार्यक्रमोऽयं आकाशवाण्या: वेबफलके **newsonair.com** इत्यत्र अपि उपलब्धो भविष्यति। सममेव आकाशवाण्या:, दूरदर्शनस्य, प्रधानमंत्री कार्यालयस्य, सूचनाप्रसारणमंत्रालयस्य च यू-ट्यूब वाहिनीषु अपि एष: कार्यक्रम: प्रसारयिष्यते।

## क्रिकेट

ऑस्ट्रेलिया भारतं च अन्तरा संक्रीड्यमाणाया: चतसृणां क्रिकेट् निकषस्स्पर्धामालिकाया: द्वितीया क्रीडा ह्य: प्रात: ऑस्ट्रेलियाया: मेलबर्न क्रीडांगणे समारब्धा।

**।। इति वार्ताः ।।**